

# संस्कृत भारती

अक्षरम्, ८ उपमार्गः, २ घट्टः गिरिनगरम्, बेङ्गलूरु - ५६० ०८५.

# पत्रालयद्वारा संस्कृतम्

संस्कृतम् संस्कृतम् संस्कृतम् संस्कृतम् संस्कृतम्

## PARICHAYA -8

Bk. Demin 2000

## WHY PROPAGATION OF SAMSKRIT AND HOW ?

### Preservation of Palm Leaf Manuscripts

In some homes, there are old palm leaf manuscripts, books and shastra works which may not have ever been printed. As these are not used in modern times, their value is not appreciated. They are in danger of disintegrating and posterity may lose valuable facts forever. If we come to know of any such ancient palm leaf manuscripts or old works, it is our duty to help preserve them. By entrusting the manuscripts to a responsible individual or institution, we can help the cause of Samskrit and Indian culture.

### Teaching Samskrit Through Medium of Samskrit

In schools and colleges, a language is generally taught in the same medium. Hindi is usually taught in Hindi, Kannada in Kannada, Bengali in Bengali, English in English, etc. Unfortunately, Samskrit is not tought in Samskrit, but through some other medium. This has led to the impression among students that Samskrit is very diffcult and are unable to converse in Samskrit.

To bring about some change in the situation, Samskrit has to be taught in Samskrit alone and for this teachers will have to be first initiated.

Samskrita Bharathi periodically conducts training sessions for teachers, to equip them to teach Samskrit in the medium of Samskrit. It would be very helpful if we could inform teachers of Samskrit about this programme with date, venue, etc., and encourage them to participate, so that they can impart knowledge of Samskrit more effectively to their students.

*NOTE:*
**The matters given in the inner pages of the cover are only for information. Questions on these points will not be asked in the exam.**

Pari-8

ॐ

जयतु भारतम् - जयतु भारती

# संस्कृतभारती

Samskrita Bhāratī

## पत्रालयद्वारा संस्कृतम्

Samskrit Through Correspondence

'Aksharam' 8th cross, Girinagar II Phase
Bangalore-560 085. Ph.: 6721052

### परिचयः - PARICHAYA

**अष्टमः पाठः - EIGHTH LESSON**

॥ अल्पाक्षररमणीयं यः कथयति निश्चितं स खलु वाग्मी ॥

He who can tell charmingly in a few words is certainly the orator.

### १. विभक्तिपरिचयः

In the preceeding lessons, the seven cases were made familiar to you. Apart from these seven cases, there is a "Sambodhana Vibhakti" (Vocative case) also. The Vocative case is only a variety of the Nominative case (Prathama Vibhakti). It is not an independent case.

We use the Vocative case in addressing a person.

Eg., भो राम ! O ! Rama.

भो and हे are used to indicate that it is a vocative.

१. भो मुकुन्द ! अत्र पश्य - O Mukunda ! Look here.

२. हे गोविन्द ! कुत्र गच्छसि ? - O Govinda ! Where are you going?

अये, अयि, अरे, रे and others are used for addressing. मान्य, महोदय, श्रीमन्, आर्य etc. and मान्ये, आर्ये, मातः, भगिनि etc. are used for addressing men and women respectively. It is left to one's discretion as to which of them suits better in the context.

The Vocative singular form will be different from the Nominative singular. The dual and the plural forms in Vocative and Nominative will be same. Below are given a few forms in Vocative singular.

| | |
|---|---|
| अकारान्तः पुंल्लिङ्गः - **राम !** | आकारान्तः स्त्रीलिङ्गः - **रमे !** |
| इकारान्तः पुंल्लिङ्गः - **हरे !** | इकारान्तः स्त्रीलिङ्गः - **मते !** |
| उकारान्तः पुंल्लिङ्गः - **गुरो !** | ईकारान्तः " - **नन्दिनि !** |
| | उकारान्तः " - **धेनो !** |

**अव्ययानि** ( Indeclinables )

Words that do not have changes in gender, number and case are called Avyayas or Indeclinables. There are some indeclinables ending in suffixes (प्रत्ययान्त) गत्वा, गन्तुम्, etc.

A) Some indeclinables are given below. It is also shown how are they to be used. Form your own sentences with those indeclinables.

अन्तः - inside, बहिः - outside, दिवा - in the day, तूष्णीम् - silently, स्वयम् - oneself, itself, मा - do not, एवम् - in this way, thus, इत्थम् - in this manner, सर्वदा - always, रे - O! पुरा - once ago, अलम् - enough, किमर्थम् - for what purpose, सम्यक् - well, properly, सर्वत्र - every-where, नक्तम् - in the





night, सायम् - in the evening, पुनः - again, शनैः - slowly, चिरम् - for a long time, कदाचित् - once, उपरि - above, अधः - below, वृथा - waste, सह - with, चेत् - if, उच्चैः - loudly, मन्दम् - gently, द्वारा - through, कृते - for.

Sentences

१. उद्यानात् **बहिः अन्तः** च वृक्षाः भवन्ति ।

२. आकाशे नक्षत्राणि **नक्तं** राजन्ति । **दिवा** न राजन्ति ।

३. सा गायति, **तूष्णीं** तिष्ठ ।

४. सचिवः **स्वयम् आगत्य** दृष्टवान् ।

५. त्वम् **एवं मा** कुरु ।

६. **इदानीम् इत्थं** वदसि किम् ?

७. **किमर्थं** छात्राः **सम्यक्** न पठन्ति ?

८. **पुरा** एकः नृपः आसीत् ।

९. त्वं **सम्यक्** पठ ।

१०. **सर्वत्र** वायुः अस्ति ।

B) चेत् - If, were it to happen, had it occurred. To Express the above ideas the word चेत्, should be added to the verbs in Present Tense. Eg.

करोति चेत् - If one does अस्ति चेत् - If it is, आगच्छति चेत् - were (he) to come, नास्ति चेत् - If not.

१. भवान् आगच्छति चेत् समीचीनम् ।

२. वृष्टिः भवति चेत् जनाः सन्तुष्टा. भवन्ति ।

३. समयः अस्ति चेत् मम गृहम् आगच्छतु ।

४. अभ्यासं करोषि चेत् उत्तीर्णः भवसि ।

५. पुस्तकं गृहे अस्ति चेत् आनीय ददामि ।

(समीचीनम् - well, good; आनीय - having brought)

C) The following indeclinables are always used together:

१. यदा - तदा ।, २. यदि - तर्हि ।, ३. यावत् - तावत् ।
४. यथा - तथा ।, ५. यद्यपि - तथापि ।

Notice the following sentences with these indeclinables:

I. यदा - तदा (When - then)

१. 'यदा' अधर्मस्य ग्लानिः भवति 'तदा' देवः अवतरति ।

When Dharma declines, then the God incarnates.

२. यदा धनं लभ्यते तदा भिक्षुकः सन्तुष्टः भवति ।

३. यदा वसन्तकालः तदा कोकिलः कूजति ।

४. यदा सूर्यास्तः भवति तदा पक्षिणः नीडं प्रविशन्ति ।

(लभ्यते - is obtained, is available; कोकिलः - cuckoo, कूजति - coos, नीडम् - the nest.)

II. यदि - तर्हि (If - Then)

१. 'यदि' विरामः अस्ति 'तर्हि' आगच्छ ।

If you have a vacation, then you come.

२. यदि पुस्तकम् अस्ति तर्हि प्रदर्शय ।

३. यदि कार्यं समाप्तं तर्हि भवान् गच्छतु ।

४. यदि समयावकाशः लभ्यते तर्हि आगच्छामि ।

(प्रदर्शय - (you) show; समयावकाशः - leisure time; लभ्यते - is got)

(Note Instead of यदि-तर्हि, 'चेत्' may be used.

'यदि' कार्यं समाप्तं 'तर्हि' भवान् गच्छतु ।
कार्यं समाप्तं 'चेत्' भवान् गच्छतु ।

However, the sense of these two sentences remain the same.)





III. यावत् - तावत् (As long as - so long)

१. 'यावत्' हिमालयः भवति 'तावत्' हिन्दुसंस्कृतिः तिष्ठति ।

As long as Himalaya stays, so long the Hindu culture stays.

२. यावत् सूर्यः तिष्ठति तावत् संस्कृतं विराजते ।

३. सः यावत् खादति तावत् एषः न खादति ।

४. क्षीरस्य यावत् मूल्यं तावत् मूल्यं मृत्तैलस्य नास्ति ।

(विराजते - shines; मूल्यम् - value; मृत्तैलस्य - of kerosene)

IV. यथा - तथा (As-so)

१. यथा राजा तथा प्रजाः ।

As is the king so are the subjects.

२. यथा प्रयत्नं करोति तथा फलं प्राप्नोति ।

३. त्वं यथा वदसि तथा एव भवतु ।

४. यथा श्रेष्ठः आचरति तथा जनाः अपि आचरन्ति ।

(प्राप्नोति - obtains; भवतु - be it so; आचरन्ति - conducts, behaves)

V. यद्यपि - तथापि (Even though - still)

१. 'यद्यपि' विभीषणः अग्रजं त्यक्तवान्, 'तथापि' न अयम् अधर्मः ।

Even though Vibheeshana left his elder brother, still it is not 'Adharma'.

२. अलसाः यद्यपि दृढकायाः, तथापि ते कार्यं न कुर्वन्ति ।

३. यद्यपि अहं सम्भाषणं करोमि, तथापि मम तृप्तिः नास्ति ।

४. यद्यपि तस्य समयावकाशः अस्ति, तथापि सः न आगच्छति ।

(अलसाः - the lazy; दृढकायाः - the strong bodied)

प्रश्नाः

अ) Use the following indeclinables in your sentences:

१) प्रातः २) तूष्णीम् ३) स्वयम् ४) सदा ५) पुरा ६) ततः ७) कथम् ८) इदानीम् ९) सह १०) वृथा

आ) १. वृक्षाः कुत्र सन्ति ? २. नक्षत्राणि कदा राजन्ति ?
३. नृपः कदा आसीत् ? ४. वायुः कुत्र अस्ति ?
५. सचिवः कथम् आगत्य दृष्टवान् ?

## २. चाटुश्लोकः

Monkey-tricks (कपिचेष्टा) are well-known. What if some more provocations are employed! When a person is already crooked and if some vices enter, he will behave like this.

मर्कटस्य सुरापानं मध्ये वृश्चिकदंशनम् ।
तन्मध्ये भूतसञ्चारः यद्वा तद्वा भविष्यति ॥

A Monkey afterall ! He is drunk! A scorpion has bitten him' Besides he is possessed by a goblin! Imagine what could happen?

## ३. समस्या

The speciality of riddle lies in containing the answer in questions. If the words of interrogative sentences are split or jointly read we get answers. In the following is given a verse comprised of 4 questions. Try to get the answers.

किं नरः कुरुते गानम् ? कं कं पुष्णाति जाङ्गलम् ?
काऽमितार्थप्रदा देव-गवी ? किं शुकवत् वनम् ?





What kind of a person sings? (Who is the person who sings?) Whom does meat nourish? Which divine cow yields unlimited desirable objects? Which is the forest that has parrots?

(For answer - see last page)

## ४. सुभाषितम्

लभेत सिकतासु तैलमपि यत्नतः पीडयन्
पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः ।
कदाचिदपि पर्यटन् शशविषाणमासादयेत्
न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥

पदविभागः-

लभेत, सिकतासु, तैलम्, अपि, यत्नतः, पीडयन्, पिबेत्, च, मृगतृष्णिकासु, सलिलम्, पिपासार्दितः, कदाचित्, अपि, पर्यटन्, शशविषाणम्, आसादयेत्, न, तु, प्रतिनिविष्टमूर्खजनचित्तम्, आराधयेत् ।

तात्पर्यम्-

Squeezing with efforts one can get oil from sand. A thirsty person may drink water from the mirage. Sometimes while wandering one may find the horns of a hare. But it is impossible to please the minds of determined fools.

व्याघ्रीव तिष्ठति जरा परितर्जयन्ती
रोगाश्च शत्रव इव प्रहरन्ति देहम् ।
आयुः परिस्रवति भिन्नघटादिवाम्भः
लोकस्तथाप्यहितमाचरतीति चित्रम् ॥

पदविभागः-

व्याघ्री, इव, तिष्ठति, जरा, परितर्जयन्ती, रोगाः, च, शत्रवः, इव, प्रहरन्ति, देहम्, आयुः, परिस्रवति, भिन्नघटात्, इव, अम्भः, लोकः, तथा, अपि, अहितम्, आचरति, इति, चित्रम् ॥

तात्पर्यम्-

Old age frightens man like a tiger. Diseases strike the body like enemies. Life-time is dripping down as water from a broken pot. Yet people think of harming others. They do not realise that they are transitory. This is indeed a matter of wonder.

## ५. पदसङ्ग्रहः

सूच् - To indicate

१) सूचयति २) सूच्यते ३) सूचयिष्यति

४) सूचयितव्यम् - सूचनीयम् ५) सूचितः - सूचिता - सूचितम् ६) सूचितवान् - सूचितवती ७) सूचयन् - सूचयन्ती ८) सूचयित्वा - संसूच्य ९) सूचयितुम् ।

अर्च - To worship

१) अर्चति २) अर्च्यते ३) अर्चिष्यति

४) अर्चितव्यम् - अर्चनीयम् ५) अर्चितः - अर्चिता - अर्चितम् ६) अर्चितवान् - अर्चितवती ७) अर्चन् - अर्चन्ती ८) अर्चित्वा - समर्च्य ९) अर्चितुम् ।

ईक्ष् - To see

१) ईक्षते २) ईक्ष्यते ३) ईक्षिष्यते

४) ईक्षितव्यम् - ईक्षणीयम् ५) ईक्षितः - ईक्षिता - ईक्षितम् ६) ईक्षितवान् - ईक्षितवती ७) ईक्षमाणः - ईक्षमाणा ८) ईक्षित्वा - समीक्ष्य ९) ईक्षितुम्





ऊह - To guess

१) ऊहते २) ऊह्यते ३) ऊहिष्यते

४) ऊहितव्यम् - ऊहनीयम् ५) ऊहितः - ऊहिता - ऊहितम् ६) ऊहितवान् - ऊहितवती ७) ऊहमानः - ऊहमाना ८) ऊहित्वा - समुह्य ९) ऊहितुम् ।

## ६. काव्यकथा

### रामायणम्

दशरथः अपुत्रः । शापः अनुग्रहः एव जातः तस्य ।

रावणः राक्षसराजः । स देवान् पीडयति स्म । देवाः विष्णुसमीपं गतवन्तः । विष्णुः कथितवान्- 'रावणवधार्थं दशरथस्य पुत्रो भविष्यामि' इति । ततः दशरथस्य रामः, लक्ष्मणः, भरतः, शत्रुघ्नः इति चत्वारः पुत्राः अभवन् । सर्वे सकलाः विद्याः अधीतवन्तः । रामलक्ष्मणौ यागरक्षणार्थं विश्वामित्रेण सह आश्रमं गच्छतः । यज्ञरक्षणानन्तरं रामः अहल्याम् उद्धृतवान् । ततः तौ विश्वामित्रेण सह मिथिलां प्राप्तवन्तौ । रामः जनकराजस्य सभायां शिवधनुषः भङ्गं कृतवान् । ततः रामस्य लक्ष्मणस्य भरतस्य शत्रुघ्नस्य च विवाहः जातः । सर्वे अयोध्यां प्रत्यागच्छन्ति । मार्गे रामः परशुरामस्य गर्वभङ्गं करोति ।

ततः रामस्य यौवराज्याभिषेकार्थं दशरथः सन्नाहं करोति । किन्तु कैकेयीवचनात् रामः लक्ष्मणेन सीतया च सह अरण्यं गच्छति । दशरथस्य अवसानं भवति । मातुलगृहात् आगतः भरतः श्रीरामसमीपं गत्वा पादुकाम् आनयति । ततः दण्डकारण्ये शूर्पणखाप्रसङ्गात् क्रुद्धः रावणः सीताम् अपहरति । ततः किष्किन्धासमीपे रामसुग्रीवयोः सख्यं भवति । रामः वालिनं संहरति । आञ्जनेयः लङ्कायां सीतां दृष्ट्वा वृत्तान्तं निवेदयति । रामः समुद्रस्य सेतुं बद्ध्वा लङ्कां प्रविशति । रावणस्य वधं च करोति ।

ततः विमानेन श्रीरामः लक्ष्मणेन सीतया च सह अयोध्याम् आगच्छति । रामस्य पट्टाभिषेको भवति । किन्तु सीतायाः विषये जनापवादं श्रुत्वा रामः

सीतापरित्यागं करोति । वाल्मीकेः आश्रमे सीता कुशलवौ प्रसूतवती । कुशलवौ वाल्मीकेः सकाशात् रामायणं पठतः । श्रीरामः अश्वमेधयागं कृतवान् । तदा कुशलवौ रामायणं गायतः । ततः रामः वाल्मीकिमुनेः आश्रमं गच्छति । वाल्मीकिमुनिः सीतां परिग्रहीतुं कथयति । श्रीरामः "पुनः सर्वेषां पुरतः 'अहं शुद्धा' इति सीता कथयतु"- इति उक्तवान् । इदं श्रुत्वा सीता खिन्ना । तत्क्षणे भूमौ बिलं जातम् । सीता तत्र लीना । रामादयः सरयून‍द्यां देहत्यागं कृतवन्तः । अनन्तरं कुशः नृपः अभवत् ।

## Ramayana

Dasharatha was childless. Even the curse turned into a boon in his case.

Ravana was the king of demons. He was tormenting the gods. Gods approached Vishnu. Vishnu said- "To kill Ravana, I shall be born as the son of Dasharatha." Then Dasaratha got four sons, Rama, Lakshmana, Bharata and Shatrughna. All of them learnt all the lores. Rama and Lakshmana went to hermitage with Vishvamitra for guarding the sacrifice. After guarding the sacrifice Rama revived Ahalya. Then both of them reached Mithila along with Vishvamitra. Rama breaks Shiva's bow in the court of Janaka. Then the marriage of Rama, Lakshmana, Bharatha and Shatrughna takes place. All return to Ayodhya. On the way Rama allayed the pride of Parashurama. Then Dasharatha makes preparations for the coronation of Rama as the heir-apparent. But on the word of Kaikeyi, Rama along with Lakshmana and Sita, goes to the forest. Dasaratha dies. Returning from his maternal uncle's place, Bharatha goes to Rama and brings his sandals. Then in the Dandaka forest, enraged by the incident of Surpanakha, Ravana abducts Sita. Then near Kishkindha, Rama and Sugriva become friends.





Rama kills Vali. Anjaneya finds Sita in Lanka and informs about the matter. Rama builds a bridge across the ocean, and enters Lanka. He kills Ravana.

Thereafter Rama, along with Lakshmana and Sita comes to Ayodhya by a plane. Rama's coronation takes place. But on hearing scandals about Sita talked by the people, Rama abandons Sita. In the hermitage of Valmiki, Sita gives birth to Kusha and Lava. Kusha and Lava learn Ramayana from Valmiki. Rama celebrates the Horse sacrifice. On the occasion Lava and Kusha sing the Ramayana. Then Rama comes to Valmiki's hermitage. Valmiki asks him to accept Sita. Sri Rama says "Let her declare before all that she is pure." Sita becomes sad. At that moment the earth breaks into a hole. Sita disappears in that. Rama and others give up their bodies in the river Sarayu. Then Kusha becomes the king.

## ७. अन्वयक्रमः

**अवजानासि मां यस्मादतस्ते न भविष्यति ।**
**मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा ॥ १४ ॥**

**पदविभागः-**

अवजानासि, माम्, यस्मात्, अतः, ते, न, भविष्यति, मत्प्रसूतिम्, अनाराध्य, प्रजा, इति, त्वाम्, शशाप, सा ॥

**अन्वयः-**

यस्मात्, माम्, अवजानासि, अतः, सत्प्रसूतिम्, अनाराध्य, ते, प्रजा, न, भविष्यति, इति, सा, त्वाम्, शशाप ।

**अन्वयार्थः-**

यस्मात् = By what (reason), माम् = me, अवजानासि = you have ignored अतः = therefore (by that very reason), मत्प्रसूतिम् = my

progeny, अनाराध्य = without propitiating ते = to you, प्रजा = child, न भविष्यति = will not be इति = thus सा = the divine cow, त्वाम् = you, शशाप = cursed.

**तात्पर्यम्-**

By your inadvertant behaviour the divine cow thought that you have ignored her. Therefore the enraged cow pronounced this curse- "O King ! You have ignored me. Even after seeing me you have not served me. Therefore without serving my progeny you can not raise progeny." - said the sage, Vasistha to the king Dilipa.

स शापो न त्वया राजन्न च सारथिना श्रुतः ।
नदत्याकाशगङ्गायाः स्रोतस्युद्दामदिग्गजे ॥ १५ ॥

**पदविभागः -**

सः, शापः, न, त्वया, राजन्, न, च, सारथिना, श्रुतः, नदति, आकाशगङ्गायाः, स्रोतसि, उद्दामदिग्गजे ।

**अन्वयः -**

उद्दामदिग्गजे, आकाशगङ्गायाः, स्रोतसि, नदति (सति), राजन्, सः, शापः, त्वया, न, श्रुतः, सारथिना च न (श्रुतः) ।

**अन्वयार्थः -**

उद्दामदिग्गजे - With unbound (free) elephants of quarters, आकाशगङ्गायाः - of the river Ganges, स्रोतसि - in the current, नदति (सति) - while roaring, राजन् - O king!, सः शापः - that curse, त्वया - by you, न श्रुतः - was not heard, सारथिना च - by (your) charioteer too, न (श्रुतः) - was not, (heard).





**तात्पर्यम्-**

During that time the elephants of quarters were playing in the waters of the Ganges. The noise of the water current filled the air all sides. Therefore the curse was not audible either to you or your charioteer.

## ८. अनुवादपद्धतिः

Verbal translation is preferable when the subject matter involving tense, case etc, is to be translated. On the otherhand, while translating a story or news item or an article, nonliteral (sense) translation should be restored.

Below are given a few other points that are to be borne in mind in free translation:

- Carefully read the subject of translation from the beginning to the end once.
- Try to grasp the purport of each sentence one after the other.
- As far as possible construct simple and short sentences classifying the subject in accordance with purport. Each sentence may consist of 3 or 4 words.
- In the initial stage don't try to translate the whole of long sentences. If done, more number of errors creep in.
- Even at the commencement don't try to translate highly imaginative and discussive news items and write - up, because there will be great difficulty in handling both the language and the matter.
- Make it a habit to go through again what you have written.

Below are given a few sentences to show how a long sentence can be broken into small sentences.

1. Once a friend met a farmer, Govinda by name, living in Karavirapura on his way to the city and asked him - 'Is everything well'?

   पूर्वं करवीरपुरे गोविन्दः नाम एकः कृषिकः वसति स्म । एकदा सः नगरं गच्छन् आसीत् । तदा तस्य स्नेहितः मार्गे मिलितवान् । सः पृष्टवान्- "किं भोः, सर्वं कुशलं किम् ?" इति ।

2. Since Sriram, who was clerk in a post-office did not get pension even after a year from retirement, enraged, went to the main post-office and having met a higher officer reported to him that he was Sriram who had been working in the same department but has not received any pension hitherto.

   श्रीरामः पत्रालयकार्यालये लिपिकारः आसीत् । 'निवृत्तेः एकवर्षानन्तरम् अपि निवृत्तिवेतनं न आगतम्' इति सः खिन्नः । अतः सः प्रधानपत्रालयकार्यालयं गतवान् । अधिकारिणं दृष्टवान् । 'अहं श्रीरामः । अत्र एव पूर्वं कार्यं करोमि स्म । इतोऽपि निवृत्तिवेतनं न आगतम्' इति सः सूचितवान् ।

3. Formerly, when the king Bhoja was ruling, a farmer called Suguna, in the city of Dhara, coming across a golden vessel, felt happy that his door of luck opened for him.

   पूर्वं भोजराजः धारानगरं पालयति स्म । तदा सुगुणः नाम कृषिकः आसीत् । एकदा सः कर्षणसमये एकं सुवर्णपात्रं दृष्टवान् । 'भाग्यं फलितम्' इति सः सन्तुष्टः जातः ।

Following these lines you too start translating small stories.





# ९. सङ्ख्याविषयाः

Groups known as constituted by nine

| | | |
|---|---|---|
| **नव ग्रहाः** | - | सूर्यः, चन्द्रः, मङ्गलः, बुधः, गुरुः, शुक्रः, शनिः, राहुः, केतुः । |
| **नव निधयः** | - | महापद्मः, पद्मः, शङ्खः, मकरः, कच्छपः, मुकुन्दः, कुन्दः, नीलः, खर्वः । |
| **नव रत्नानि** (कवयः) | - | धन्वन्तरिः, क्षपणकः, अमरसिंहः, शङ्कुः, वेदाल-भट्टः, घटकर्परः, कालिदासः, वराहमिहिरः, वररुचिः । |

---

Answer to the riddle -

1. किन्नरः - a demi-God
2. कङ्कम् - Vulture (ace)
3. कामितार्थप्रदा - the giver of desired objects
4. किंशुकवत् - with kimshuka trees.

❊ ❊ ❊

ॐ

# संस्कृतभारती

## पत्रालयद्वारा संस्कृतम्

## परिचयः

### अष्टमः पाठः

### प्रश्नः

1. Convert the following words into Dvitiya, Tritiya and Saptami (Accusative, Instrumental and Locative) cases and use them in your sentences:

   मित्रम्, देवः, लता, नन्दिनी ।

2. Write Anvayartha and Tatparya of the following sentences.

   १. अपि स्वर्णमयी लङ्का न मे लक्ष्मण रोचते ।
   जननी जन्मभूमिश्च स्वर्गादपि गरीयसी ॥

   (न रोचते - does not like, गरीयसी - higher, greater)

   २. ततः स विस्मयाविष्टो हृष्टरोमा धनञ्जयः ।
   प्रणम्य शिरसा देवं कृताञ्जलिः अभाषत ॥

   (हृष्टरोमा - horripulated, कृताञ्जलिः - with folded hands, प्रणम्य - having bowed, अभाषत - said)

परि(इं)-VIII-जून्-९९, १०००



## Treasure of Knowledge in Ancient India

*(Continued from previous lesson)*

चलं यथा दृष्टिपथं परैति सूक्ष्मं महद्रूपमिवाभिभाति ।
स्वरूपमालोचयते च रूपं परं तथा बुद्धिपथं परैति ॥

A stationary object appears to move when seen through the eyes of a person in motion (such as the trees on the riverbank when seen by a person sitting in a swift boat.) A tiny speck appears large to the eye when seen through a glass (lens). In the same way, the form less Atma present in the body also appears as having form, by the illusion in the mind.

To illustrate the connection between the soul and the body, Vyasa has given two examples here; when viewed from a moving frame of reference, even stationary objects will appear to be moving. It is said that Copernicus was the first to note this phenomenon. But from the verse from the Mahabharata, it is clear that this was known during Vyasa's time.

Aryabata has also written about this in his work. It is remarkable that what was first discussed in 15th century Europe, had already been described thousands of years ago by Indian seers.

The above sloka also indicates knowledge that viewing a tiny object through a glass makes it appears large, while a clear/plane miror reflects objects as they are, without distortion

मूढानाम् अवलिप्तानाम् असारं भाषितं बहु ।
दर्शयत्यन्तरात्मानम् अग्निरूपमिवाशुंमान् ॥

The inconsistent, unwise utterances of fools and egoistic people betray the mean nature of their heart, just as the effulgent says of the sun indicate that the core of the sun is full of fire.

